॥ अनात्मश्रीविगर्हणम् ॥

लब्धा विद्या राजमान्या ततः किं
प्राप्ता सम्पत्प्राभवाढ्या ततः किम् ।
भुक्ता नारी सुन्दराङ्गी ततः किम्
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १॥

केयूराद्यैर्भूषितो वा ततः किं
कौशेयाद्यैरावृतो वा ततः किम् ।
तृप्तो मृष्टान्नादिना वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ २॥

दृष्टा नाना चारुदेशास्ततः किं
पुष्टाश्चेष्टा बन्धुवर्गास्ततः किम् ।
नष्टं दारिद्र्यादिदुःखं ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ३॥

स्नातस्तीर्थे जह्नुजादौ ततः किं
दानं दत्तं द्व्यष्टसंख्यं ततः किम् ।
जप्ता मन्त्राः कोटिशो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ४॥

गोत्रं सम्यग्भूषितं वा ततः किं
गात्रं भस्माच्छादितं वा ततः किम् ।
रुद्राक्षादिः सद्धृतो वा ततः किम्
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ५॥

अन्नैर्विप्रास्तर्पिता वा ततः किं
यज्ञैर्देवास्तोषिता वा ततः किम् ।
कीर्त्या व्याप्ताः सर्वलोकास्ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ६॥

कायः क्लिष्टश्चोपवासैस्ततः किं
लब्धाः पुत्राः स्वीयपत्न्यास्ततः किम् ।
प्राणायामः साधितो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ७॥

युद्धे शत्रुर्निर्जितो वा ततः किं

भूयो मित्रैः पूरितो वा ततः किम् ।
योगैः प्राप्ताः सिद्धयो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ८॥

अब्धिः पद्भ्यां लङ्घितो वा ततः किं
वायुः कुम्भे स्थापितो वा ततः किम् ।
मेरुः पाणावुद्धृतो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ९॥

क्ष्वेलः पीतो दुग्धवद्वा ततः किं
वह्निर्जग्धो लाजवद्वा ततः किम् ।
प्राप्तश्चारः पक्षिवत्खे ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १०॥

बद्धाः सम्यक्पावकाद्यास्ततः किं
साक्षाद्विद्धा लोहवर्यास्ततः किम् ।
लब्धो निक्षेपोऽञ्जनाद्यैस्ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ११॥

भूपेन्द्रत्वं प्राप्तमुर्व्यां ततः किं
देवेन्द्रत्वं सम्भृतं वा ततः किम् ।
मुण्डीन्द्रत्वं चोपलब्धं ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १२॥

मन्त्रैः सर्वः स्तम्भितो वा ततः किं
बाणैर्लक्ष्यो भेदितो वा ततः किम् ।
कालज्ञानं चापि लब्धं ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १३॥

कामातङ्कः खण्डितो वा ततः किं
कोपावेशः कुण्ठितो वा ततः किम् ।
लोभाश्लेषो वर्जितो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १४॥

मोहध्वान्तः पेषितो वा ततः किं
जातो भूमौ निर्मदो वा ततः किम् ।
मात्सर्यार्तिर्मीलिता वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १५॥

धातुर्लोकः साधितो वा ततः किं
विष्णोर्लोको वीक्षितो वा ततः किम् ।
शंभोर्लोकः शासितो वा ततः किं
येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १६॥

यस्येदं हृदये सम्यगनात्मश्रीविगर्हणम् ।
सदोदेति स्वात्मा साक्षात्कारस्य भाजनम् ॥ १७॥ var स एवात्म
अन्ये तु मायिकजगद्भ्रान्तिव्यामोहमोहिताः ।
न तेषां जायते क्वापि स्वात्मसाक्षात्कृतिर्भुवि ॥ १८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ
अनात्मश्रीविगर्हणप्रकरणं सम्पूर्णम् ॥